तादृशानुयोगितायाश्च विपूर्वकाप्लृधात्वर्थसंयोगे, तत्रैव सर्वशब्दार्थस्य स्वसमभिव्याहृतपदार्थतावच्छेदकस्वभिन्नद्रव्यत्वव्यापकत्वस्य, व्यापकताघटकाभावेऽन्त पदार्थस्यावच्छिन्नत्वसम्बन्धेन च अन्वयात् भगवत्प्रतियोगिकसंयोगे स्वभिन्नद्रव्यत्वसमानाधिकरणान्तर्देशावच्छिन्नाभावाप्रतियोगित्वबोधे तादृशद्रव्यत्वनिरूपितसंयोगसम्बन्धघटितोक्तव्यापकत्वस्य भगवत्सुदीच्यमानसंयोधविषयत्वसम्भवात् उक्तश्रुतेरुक्तार्थबोधकत्वोपपत्तिः ।

न च यत्रेश्वरस्य व्याप्तिस्तत्र तदीयधर्मभूतज्ञानस्यापि व्याप्तिरिति नियमात् ईश्वरस्य स्वीयधर्मभूतज्ञानेऽन्तर्व्याप्तौ तादृशधर्मभूतज्ञानस्यापि स्वस्मिन्नन्तर्व्याप्तिर्वाच्या, तथा स्वीकारे चात्माश्रयापत्त्या भगवत स्वीयधर्मभूतज्ञाने व्याप्त्यसम्भवात् स्वभिन्नद्रव्यत्वनिरूपितोक्तव्यापकत्वरूपसर्वान्तरत्वानुपपत्तिरिति वाच्यम्,—तच्छब्दस्य स्व–स्वधर्मभूतज्ञानातिरिक्तद्रव्यपरत्वेन उक्तसर्वान्तरत्वस्य उक्तश्रुतिजन्यबोधविषयत्वोपपत्ते ।

नचात्मनो निरवयवत्वेन अन्तर्देशाभावात् तादृशश्रुतिघटकतच्छब्दार्थे ईश्वरतज्ज्ञानभेदवत् जीवभेदोऽपि निवेशनीय इति वाच्यम्,—अन्तर्देशस्य सावयवत्वव्याप्यत्वे प्रमाणाभावात्, निरवयवे प्रधानादावन्तर्देशाभ्युपगमेन व्यभिचाराच्च । अभ्युगतश्च प्रधानस्य निरवयवत्वपक्षो वेदान्तदेशिकै "अव्यक्त त्वन्मतेऽपि ह्यनवयव" मिति ।

न च अणुभिन्नद्रव्यत्वव्याप्यत्वस्यैवान्तर्देशे स्वीकारेण चेतनस्याणुद्रव्यत्वादन्तर्देशाभावेन उक्तश्रुतिसङ्कोच आवश्यक इति वाच्यम्,—" य आत्मनि तिष्ठन्नात्मनोऽन्तर " " अणोरणीयान् " इत्यादिश्रुत्या " कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्य " इत्यादिगीतावचनेन च चेतनेष्वन्तर्व्याप्तिबोधनादन्तर्देशावश्यकत्वेन श्रुत्यादिविरुद्धस्य तादृशनियमस्यानुपादेयत्वात् ।

यदि च तादृशश्रुतिघटकान्तरशब्दस्य पदार्थसंयोगिपरत्वेन तादृश श्रुतिविरोधो नास्तीत्युच्यते, तदा तादृशश्रुतिघटकान्तरशब्दस्य तिलतैलव दन्तर्व्याप्तिप्रतिपादकत्वपराजिज्ञासाधिकरणश्रुतप्रकाशकाविरोधस्य दुरुद्धर- त्वात् ! तथा च श्रुतप्रकाशिका—" 'य आत्मनि तिष्ठ' न्नित्युक्ते वेद्यामग्नि स्तिष्ठति तिले तैलं तिष्ठतीतिवत् बहिरवहिस्स्थितिसाधारण्यात्, अतस्तद्व्या ख्यार्थमाह—'आत्मनोऽन्तर' इतीति " ।

किञ्चान्तरशब्दस्य पदार्थसंयोगिपरत्वे 'आत्मनोऽन्तर' इत्येतावतैव बहिः स्थितेरपि लाभात् ' आत्मनि तिष्ठ ' न्नित्यस्य वैयर्थ्यं दुष्परिहरम् । ' आत्मनि तिष्ठ ' न्नित्यस्य च वेद्यामग्निस्तिष्ठतीतिवद्बहिः स्थितिपरत्वं पूर्वोक्तश्रुतप्रकाशिकयैवावगम्यत इति न तस्यान्यथार्थवर्णनं घटते ।

केचित्तु—प्राच्यत्वाद्यन्यतमसम्बन्धेन तद्विशिष्टान्यत्वमेव तदन्त- रत्वम्, तच्च चेतनसाधारणम्, तथा च भगवतो जीवान्तर्व्यापित्वं तदन्त र्देशाभावेपि तद्बहिर्देशसंयोगमादायोपपद्यते, अचेतनान्तर्वृत्तित्वस्य च तद- न्तर्देशसंयोगमादायैवोपपत्तिरित्याहुः; तन्न, सम्यक् तदन्तस्त्वस्य तत्साधार- ण्ये घटो घटस्यान्तरितिव्यवहारापत्तेः ।

किञ्च घटान्तर्व्यापित्वेऽदादिग्बहिर्देशसंयोगमादायाप्युपपादनसम्भवात् अर्थान्तरस्य दुर्वारता ब्रह्मणः कालान्तर्व्याप्तौ सर्वसमतत्वेन कालापेक्षया प्राच्यादिदिग्भावेन प्राच्याद्यन्यतमसम्बन्धेन कालविशिष्टाप्रसिद्ध्या बहिःस- म्बन्धेन कालविशिष्टान्यसंयोगित्वरूपतदन्तरत्वानुपपत्तिश्च ।

किञ्च पूर्वोक्तगीतावचनघटकस्य ' अणोरणीयांस ' मित्यस्य 'जीवा दपि सूक्ष्मतर' मिति गीताभाष्ये व्याख्यातत्वेन आत्मनि अन्तर्देशानङ्गीकारे ईश्वरस्य तदपेक्षया सूक्ष्मतरत्वानिर्वाहात् । ' जीवादपि सूक्ष्मतर ' मित्यस्य तदपेक्षयाऽपकृष्टपरिमाणवत्त्वमिति नार्थः, तथा सति भगवतो विभुत्वमति

पादिकाः श्रुतिस्मृतयो व्याकुप्येयुः । नापि तदीयतदूपार्थसंयोगित्वं तदर्थः, तस्य सूक्ष्मतरशब्दार्थत्वाभावात् ; किन्तु तदन्तर्देशसंयोगित्वरूपमेव तदर्थ इति वाच्यम् ; तथा च अन्तर्देशस्य तदपेक्षयाल्पस्यावश्यकत्वादेव ताहशसूक्ष्मतरत्वनिर्वाह, स्पष्ट एव विदुषाम् । " मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव " इति वचनेनापि तत्सिद्धिः, सूत्रे मणिगणवत् ब्रह्मणि चेतनाचेतनात्मकप्रपञ्चस्य प्रोतत्वं नाम तत्संयुक्तदेशापेक्षया सर्वदिक्सम्बन्धित्वमेवेति तादृशप्रोतत्वनिर्वाहायान्तर्देशावश्यकत्वात् ।

उदघोषि च श्रीभगवद्गुणदर्पणे " अणुर्बृहत्कृश स्थूलः " इत्यत्र अणुपदव्याख्यानावसरे श्रीभट्टपराशरपादैः– " अतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यात् अणु " रिति । अत्राव्यक्तादिग्रहणं यथा वा अ– व्यक्तादावीश्वरस्यान्तर्व्याप्तिः तथा जीवेपि तस्यान्तर्व्याप्तिदृष्टान्तार्थम् , सा चाघटितघटनाशक्तिनिबन्धनेति ज्ञापयितुमनुप्रवेशसामर्थ्यादित्युक्तम् । अन्वग्राहि च श्रीशठकोपदिव्यसूक्तिप्रथमदशकदशमपद्यव्याख्यायां यतीशेश्वरचरणारविन्दमकरन्दपानमत्तभृङ्गायमानैः श्रीकुरुकेश्वरैः–"यथा वा अण्डमध्ये अनायासेन व्याप्तः तथात्मवस्तुन्यपि अन्तर्व्याप्त इत्यर्थः " । इति ।

युक्तञ्चैतत्–यथा सर्वप्राकृततत्त्वापेक्षया सूक्ष्मत्वेन प्रमाणप्रतिपन्नस्य जीवस्य स्वापेक्षया स्थूलभूताव्यक्तादिसर्वतत्त्वेष्वन्तर्व्याप्तिः प्रमाणबलादिष्यते; तद्वत् जीवापेक्षयापि सूक्ष्मतरत्वेन प्रमाणशतप्रतिपन्नस्य सर्वेश्वरस्य स्वापेक्षया स्थूलभूतचेतनादियावद्द्रव्येषु अन्तर्व्याप्तत्वस्य प्रमाणबलादभ्युपगमे दोषाभावात्, जीवस्य सर्वप्राकृततत्त्वापेक्षया सूक्ष्मत्वञ्च "अच्छेद्योऽयमदाह्योयमक्लेद्योऽशोष्य एव च" इत्यत्र गीताभाष्ये व्यक्तम् । तत्रत्या पङ्क्ति–" सर्वगतत्वादात्मनः सर्वतत्त्वव्यापनस्वभावतया सर्वेभ्यस्तत्त्वेभ्यः सूक्ष्मत्वा "

दिति । तत्रैव तत्पूर्वग्रन्थस्य–" अविनाशि तु तद्विद्धि येन सर्वमिदं ततं " मित्यस्य व्याख्यानावसरे— " तदात्मतत्त्वमविनाशीति विद्धि येनात्मतत्त्वेन चेतनेन तद्व्यतिरिक्तमिदमचेतनतत्त्वं सर्वं तत–व्याप्तम्, व्यापकत्वेन निरतिशयसूक्ष्मत्वादात्मन " इत्युक्तम् ।

न च " अन्तर्वहिश्चे " ति श्रुतिसङ्कोचभिया जीवेऽन्तर्देशाङ्गीकारे तत्राप्यन्तर्देशोऽङ्गीकार्य एव तत्रापीत्यनवस्थापत्तिरिति वाच्यम्,–यत्र विशिष्यान्तर्व्याप्तिः श्रुत्या न बोधिता तत्र जीवान्तर्देश अनवस्थाभियाऽन्तर्देशो नाङ्गीक्रियते, तत्र " अन्तर्बहिश्चे " ति श्रुतिसङ्कोचे बाधकाभावात्; अत्र तु जीवत्वावच्छिन्ने अन्तर्व्याप्तिः श्रुतिबोधितत्वात् तत्र "अन्तर्बहिश्चे" ति श्रुतेरशक्यसङ्कोचत्वात् ।

वस्तुतस्तु जीवे ब्रह्मस्वरूपातिरिक्तान्तर्देशो नाङ्गीक्रियते, स्वीयदशदिक्सम्बन्धित्व स्वभिन्नत्व-उभयसम्बन्धेन स्वविशिष्टजीवकत्वरूपजीवान्तस्त्वस्य ईश्वरस्वरूपे प्रदेशभेद स्वपदेनोपादाय उपपादनसम्भवे स्वात्मकतादृशान्तर्देशावच्छिन्नात्मनिरूपितत्तादात्म्यसंयोगान्यतरसम्बन्धावच्छिन्नवृत्तित्वरूपजीवान्तर्व्याप्तत्वस्य उपपादनसम्भवात् । न च जीवान्तर्देशे तादात्म्येन वृत्तिमत्त्वमचेतनान्तर्देशे संयोगेन वृत्तिमत्त्वमित्यभ्युपगमे ' अन्तर्बहिश्चे ' ति श्रुतिघटकस्य 'व्याप्ये' त्यस्य एकरूपार्थबोधकत्वासम्भव इति वाच्यम्,–जीवेतरद्रव्येषु ईश्वरस्वरूपातिरिक्तान्तर्देशमात्मवस्तुनि च ईश्वरस्वरूपानतिरिक्तान्तर्देश स्वभिन्नत्व स्वीयदशदिक्सम्बन्धित्वोभयसम्बन्धेन किञ्चिद्विशिष्टत्वरूपेणानुगमय्य स्व स्वधर्मभूतज्ञान तिरिक्तद्रव्यत्वसमानाधिकरणान्तर्देशावच्छिन्नाभावीयमयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकधर्मस्वरूपसर्वान्तरत्वोपपत्तेश्च । अस्मिन् कल्पे जीवान्तर्देशे " अन्तर्बहिश्चे " ति श्रुतेरसंकोच अनवस्थापरिहारश्चेति विशेषः ।

न च ईश्वरे जीवान्तरत्वोपपादनायेश्वरस्य एकदेशाङ्गीकारे सावयवत्वापत्तिः, एकदेशस्य सावयवत्वव्याप्यत्वादिति वाच्यम्, एकदेशस्य सावयवत्वव्याप्यत्वानभ्युपगमात् । अन्यथा ईश्वरे प्रधानं किमेकदेशे संयुज्यते ? उत कृत्स्नावच्छेदेन संयुज्यते ? एकदेशे संयोगे ईश्वरस्य सावयवत्वं स्यात्, कृत्स्नदेशेन संयोगे भगवत्स्वरूपस्य कृत्स्नस्य प्रधानसंयुक्तत्वेन प्रधानासंयुक्तस्वप्रदेशाभावात् तस्य घटसंयोगो नास्तीत्यादिदूषणस्यापरिहार्यत्वात् । वादिनियमस्तु श्रुत्यबाधस्थल एवाभ्युपगम्यते ।

न च स्वात्मकान्तर्देशावच्छेदेन जीवे स्वस्य वृत्तित्वाङ्गीकारे आत्माश्रयापत्तिरिति वाच्यम्, अन्तर्देशत्वनारायणस्वरूपावच्छेदकतावच्छेदकावच्छेद्यतावच्छेदकयोर्भेदात् स्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्व-तादात्म्य-उभयसम्बन्धेन विषयताविशिष्टविषयतावत्त्वरूप— आत्माश्रयाभावात् ।

एतेन आत्मनि योऽन्तर्देशः स्वीक्रियते स किमात्मस्वरूपानतिरिक्त ? उतातिरिक्त ? अनतिरिक्तत्वे तदन्तरत्वस्य तद्भेदघटितत्वेन जीवे जीवान्तरत्वाभाव, अतिरिक्तत्वे स किं प्राकृत, उताप्राकृत ? तस्य प्राकृतत्वे तदपेक्षया सूक्ष्मभूते आत्मनि तस्य व्याप्त्यसम्भव, तस्याप्राकृतत्वपक्षोऽपि न सम्भवति, अप्राकृतस्य आत्मनि नित्यसम्बद्धत्वे प्रमाणाभावात्, किञ्च जीवेऽन्तर्देशाङ्गीकारे स देश आत्मनि किमवच्छेदेन वर्तते ? अन्तर्देशावच्छेदेनेति चेत् अनवस्थापत्ति, इत्यादि दूषणं निरस्तम् । उक्तरीत्या तादृशान्तर्देशात्मकस्वावच्छेदेनैव जीवे स्वस्य वृत्तित्वाङ्गीकारात्,

इदन्तु तत्त्वम्, कालादिनिरवयवद्रव्येष्वपि ब्रह्मस्वरूपात्मकान्तर्देशमादायैव तस्यान्तर्यामित्वमुपपादनीयम्, अन्यथा कालाद्यन्तर्देशस्य प्राकृतत्वे काले प्रधानादौ वा तस्य व्याप्त्यसम्भवात्, अप्राकृतत्वे तस्य 'तमसः परस्तात्''

दित्यादिश्रुत्या प्रकृतिबहिर्भूतस्य तस्य प्रकृतिव्याप्त्यसम्भवात् । अप्राकृतस्य कालान्त:पदार्थत्वे तु तदन्तर्देशः किमात्मकः ? कालात्मक इति चेत् ; तदा स्वस्य स्वान्तर्व्याप्त्यसम्भवाद्व्याघातः । ननु च कालान्तर्देशात्मका-प्राकृतदेशस्यान्तर्देशो भगवदात्मक एवेति चेत् ? तर्हि कालान्तःप्रदेश एव तदात्मकोऽस्त्वित्यलमधिकेन ॥

# ॥ अथ बहिर्व्याप्तिविचारः ॥

अत्र प्रसङ्गाद्भगवतो बहिर्व्याप्तिरपि स्वस्वज्ञानातिरिक्तद्रव्यसामान्ये ऽस्तीति निरूप्यते । तदपेक्षया बहिष्ट्वंनाम, स्वीयसर्वदिगवच्छिन्नत्व-स्वभिन्नत्वोभयसम्बन्धेन तद्व्यतिरिक्तत्वम् । तथा च स्वस्वज्ञानातिरिक्तद्रव्यत्व समानाधिकरणतादृशबहिर्देशावच्छिन्नाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियो-गितावच्छेदकधर्मवत्स्वरूपसर्वबहिर्व्याप्ति. महतो महीयसो भगवत उपपद्यते । " अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित. " इति श्रुत्या सर्वं तद्बहिर्व्याप्येति योजनावशात् बहिर्देशावच्छेदेन स्वस्वज्ञानातिरिक्तद्रव्यत्वनिरूपितसंयोगसम्बन्धघटितव्यापकताबोधात् । अत्र च तत्पदस्य स्वस्वज्ञानातिरिक्तद्रव्यपरत्वेन सर्वपदस्य व्यापकतापरत्वेन उक्तश्रुतेरुक्तार्थबोधक-त्वोपपत्ति ।

न च कालस्य विभुत्वेन तद्बहिर्देशाभावात् तादृशश्रुतेः संकुचितवृत्तिकत्वं युक्तमिति वाच्यम्,–" महतो महीया " निति श्रुत्या असंकोचा-

न च ईश्वरे जीवान्तरत्वोपपादनाय तस्य एकदेशाङ्गीकारे सावयवत्वा पत्तिः, एकदेशस्य सावयवत्वव्याप्यत्वादिति वाच्यम्, एकदेशस्य सावयवत्वव्याप्यत्वानभ्युपगमात्। अन्यथा ईश्वरे प्रधानं किमेकदेशे संयुज्यते? उत कृत्स्नावच्छेदेन संयुज्यते? एकदेशे संयोगे ईश्वरस्य सावयवत्वं स्यात्, कृत्स्नदेशेन संयोगे भगवत्स्वरूपस्य कृत्स्नस्य प्रधानसंयुक्तत्वेन प्रधानासंयुक्त प्रदेशाभावात् तस्य पदसंयोगो नास्तीत्यादिदूषणस्यापरिहार्यत्वात्। तादृशनियमस्तु शूलनाथस्यैव एवाभ्युपगम्यते।

न च स्वात्मकान्तर्देशावच्छेदेन जीवे स्वस्य वृत्तित्वाङ्गीकारे आत्माश्रयापत्तिरिति वाच्यम्, अन्तर्देशत्वनारायणत्वरूपावच्छेदकतावच्छेदकाव च्छेद्यतावच्छेदकयोर्भेदात्, स्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्व-तादात्म्य-उभयसम्बन्धेन विषयताविशिष्टविषयतात्वरूप— आत्माश्रयाभावात्।

एतेन आत्मनि योऽन्तर्देश स्वीक्रियते स किमात्मस्वरूपानतिरिक्त? उतातिरिक्त? अनतिरिक्तत्वे तदन्तरत्वस्य तद्भेदघटितत्वेन जीवे जीवान्तरत्वाभाव, अतिरिक्तत्वे स किं प्राकृत, उताप्राकृत? तस्य प्राकृतत्वे तदपेक्षया सूक्ष्मभूत आत्मनि तस्य व्याप्त्यसम्भव, तस्याप्राकृतत्वपक्षोऽपि न सम्भवति, अप्राकृतस्य आत्मनि नित्यसम्बद्धत्वे प्रमाणाभावात्, किञ्च जीवेऽन्तर्देशाङ्गीकारे स देश आत्मनि किमवच्छेदेन वर्तते? अन्तर्देशावच्छेदेनेतिचेत् अनवस्थापत्ति, इत्यादि दूषणं निरस्तम्। उक्तरीत्या नारायणान्तर्देशात्मकस्वावच्छेदेनैव जीवे स्वस्य वृत्तित्वाङ्गीकारात्,

इदन्तु तत्त्वम्, कालादिनिरवयवद्रव्येष्वपि प्रकारस्वरूपात्मकान्तर्देशाद्यायैव तस्यान्तर्व्याप्तिरुपपादनीया, अन्यथा कालाद्यन्तर्देशस्य प्राकृतत्वे काले प्रधानादौ वा तस्य व्याप्त्यसम्भवात्, अप्राकृतत्वे तस्य 'तमसः परस्तात्'

दित्वादिश्रुत्या प्रकृतिबहिर्भूतस्य तस्य प्रकृतिव्याप्त्यसम्भवात् । अत्राकृतस्य कालान्तःपदार्थत्वे तु तदन्तर्देशः किमात्मकः ? कालात्मक इति चेत् ; तदा तस्य स्वान्तर्व्याप्त्यसम्भवाद्व्याघातः । ननु च कालान्तर्देशात्मका– प्राकृतदेशस्यान्तर्देशो भगवदात्मक एवेति चेत् ? तर्हि कालान्तःप्रदेश एव तदात्मकोऽस्त्वित्यलमधिकेन ॥



# ॥ अथ बहिर्व्याप्तिविचारः ॥



अत्र प्रसङ्गाद्भगवतो बहिर्व्याप्तिरपि स्वस्वज्ञानातिरिक्तद्रव्यसामान्ये ऽस्तीति निरूप्यते । तदपेक्षया बहिष्ट्वंनाम, स्वीयसर्वदिगवच्छिन्नत्व- स्व भिन्नत्वोभयसम्बन्धेन तद्व्यक्तिविशिष्टत्वम् । तथा च स्वस्वज्ञानातिरिक्तद्रव्यत्व समानाधिकरणतादृशबहिर्देशावच्छिन्नाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियो– गितावच्छेदकधर्मवत्त्वरूपसर्वबाहिर्व्याप्ति' महतो महीयसो भगवत उपपद्य ते । " अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः " इति श्रुत्या सर्वं तद्बहिर्व्याप्येति योजनावशात् बहिर्देशावच्छेदेन स्वस्वज्ञानातिरिक्तद्रव्यत्वनि रूपितसंयोगसम्बन्धघटितव्यापकताबोधात् । अत्र च तत्पदस्य स्वस्वज्ञानाति रिक्तद्रव्यपरत्वेन सर्वपदस्य व्यापकतापरत्वेन उक्तश्रुतेरुक्तार्थबोधक– त्वोपपत्तिः ।

न च कालस्य विभुत्वेन तद्बहिर्देशाभावात् तादृशश्रुतेः संकुचितवृत्ति कत्वं युक्तमिति वाच्यम्,–" महतो महीया " निति श्रुत्या असंकोचा-

न्महत्त्वरूपसामान्यधर्मावच्छिन्नत्वदपेक्षया भगवतोऽतिशयितमहत्त्वप्रतीत्या का
लापेक्षयापि महत्त्वस्यार्थसिद्धत्वेन तदपेक्षया महत्त्वस्य च स्वावच्छेदकत्वाव
देशावच्छिन्नत्व-स्वानवच्छेदकदेशावच्छिन्नत्व उभयसम्बन्धेन तद्विशिष्टत्व
रूपत्वेन बहिर्देशावश्यकत्वेनोक्तश्रुतिसङ्कोचानावश्यकत्वात् ।

न च कालगतविभुत्वस्य परममहत्परिणामरूपत्वेन तत्र च परमत्वस्य
किञ्चिदवधिकापकर्षशून्यत्वरूपत्वेन कालगतमहत्त्वे भगवन्महत्त्वावधिकापक
र्षाङ्गीकारे तादृशपरमत्वासिद्ध्या विभुत्वासिद्धे उक्तश्रुतिघटकमहच्छब्दस्य
विभुभिन्नमहत्परत्वमावश्यकमिति वाच्यम्,—न हि विभुत्वं परममहत्परिणा
मरूपम्, सिद्धान्ते परिमाणरूपगुणानङ्गीकारात्, किन्तु द्रव्यत्वसमानाधिकरण
भेदप्रतियोगितानिरूपितसंयोगसम्बन्धावच्छिन्नावच्छेदकताशून्यत्वं विभुत्वम्,
तच्च काले अक्षुण्णमिति तादृशश्रुतिघटकमहच्छब्दस्य विभुभिन्नमहत्परत्वा
नावश्यकत्वात् ।

ननु कालादिविभुद्रव्येषु स्वभिन्नद्रव्यत्वनिरूपितसंयोगसम्बन्धघटित
व्यापकत्वस्य विभुत्वरूपत्वे घटादितद्द्रव्येषु एकदेशसंयोगेऽपि तादृशव्याप
कतारूपविभुत्वोपपादनसम्भवादर्थान्तरात्, तादृशार्थान्तरवारणार्थं निरव
च्छिन्नसंयोगसम्बन्धघटिततादृशव्यापकत्वस्य विभुत्वरूपत्वे कालापेक्षया भग
वतो महत्त्वोपपादनासम्भवात्, अभिमतासिद्धिरिति चेत् ' मैवम्, सामाना
धिकरण्यसम्बन्धेन चेतनतज्ज्ञानकालान्यत्वविशिष्टद्रव्यत्वनिरूपितनिरवच्छि-
न्नसंयोगसम्बन्धघटितव्यापकत्वस्यैव विभुत्वरूपत्वात् ।

ननु उक्तरीत्या भगवति कालावधिकमहत्त्वोपपादनेऽपि धर्मभूतज्ञाना
वधिकमहत्त्वोपपादनं न सम्भवति, " य सर्वज्ञः सर्ववित् " इति श्रुत्या

श्रीपराशरभट्टार्य " अणुर्बृहत् कृश स्थूल ' इत्यत्र बृहत्पदव्याख्याना वसरे — ' व्याप्त्यातिविपुलव्योमादिचुलकीकृत्यातिमहत्ता महिम्ना बृहदि " ति । अत्र ' व्योमादी ' त्यादिना कालपरिग्रह । अत्र व्योमग्रहण यथा वा व्योमापेक्षया महत् तथा कालापेक्षयापि महदिति दृष्टान्तार्थम् । गीता भाष्यपर्यालोचनाया कालापेक्षयापि भगवतो महत्त्व युक्तमेवेति प्रतिभाति ।

इहैकस्थ जगत् कृत्स्न पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि '

इति श्लोकव्याख्यानावसरे भाष्यम् —"इह ममैकस्मिन् देहे, तत्राप्येकस्थ एकदेशस्थ, सचराचर कृत्स्न जगत् पश्य, यच्चान्यद्द्रष्टुमिच्छसि तदप्येक देहैकदेश एव पश्ये " ति । उत्तरत्र—

' तत्रैकस्थ जगत् कृत्स्न प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा " ॥

इत्यत्रापि भाष्यम् — तत्रानन्तायामविस्तारे अनन्तबाहूदरवक्त्रनेत्रे अपरिमिततेजस्के अपरिमितदिव्यायुधोपेते स्वोचितापरिमितदिव्यभूषणे दिव्यमाल्याम्बरधरे दिव्यगन्धानुलेपने अनन्ताश्चर्यमये देवदेवस्य दिव्यशरीरे अनेकधा प्रविभक्त ब्रह्मादिविविधविचित्रदेवतिर्यङ्मनुष्यस्थावरादिभोक्तृवर्गपृथिव्यन्तरिक्षस्वर्गपातालातलवितलसुतलादिभोगस्थानभोग्यभोगोपकरणभेदभिन्न प्रकृतिपुरुषात्मक कृत्स्न जगत्, 'अह सर्वस्य प्रभवो मत्त सर्वं प्रवर्तते ' 'हन्त ते कथयिष्यामि विभूतीरात्मन शुभा ' 'अहमात्मा गुडाकेश सर्वभूताशयस्थित ' ' आदित्यानामह विष्णु ' रित्यादिना नतदस्ति विना यत् स्यान्मया भूत चराचरम् । विष्टभ्याहमिद कृत्स्नमेकाशेन स्थितो जगत् ' इत्यन्तेन उदित एकस्थमेकदेशस्थ पाण्डवो भगवत्प्रसादलब्धतद्दर्शनानुगुणदिव्यचक्षुरपश्य " दिति । 'अहमेवाक्षय काल " इति कालस्यापि

भगवद्विभूतित्वेन तत्सहितस्यैव कृत्स्नस्य जगतः भगवच्छरीरैकदेशे अणुत्वेन उपपत्तेः कालस्य भगवत्स्वरूपैकदेशान्तर्भावावश्यम्भावात् । एवञ्च भगवत्स्वरूपे प्रदेशभेदमादाय कालबहिर्व्याप्तेः कालावधिकमहत्त्वस्य चोपपादनसम्भवात् भगवतः सर्वबहिर्व्याप्तिमत्त्वमुपपन्नमिति सर्वमनवद्यम् ।

अत्र कश्चिद्गुणः स्याच्चेत्स पूर्वार्यमुखोद्गतः ।
दोषश्चेन्मामकीनोऽयं क्षम्यतां हृदयालुभिः ॥

योऽसावन्तर्बहिश्चाप्यखिलचिदचितोर्व्याप्त इत्यादिवाणी
पौराणी वाप्यगोणी शठरिपुफणितिश्चैककण्ठं न्यगादीत् ।
दुर्लक्ष्यो दुर्निरूपो निरवधिमहिमा याकरः शास्त्रयोनिः
सर्वात्मा सर्वशक्तिर्जयति निरुपधिः श्रीनिधिर्वासुदेवः ॥

॥ अन्तर्व्याप्तिबहिर्व्याप्तिविचारो समाप्तिमगात् ॥

—⁂—

॥ श्री ॥

श्रीमते रामानुजाय नमः

# अन्तर्व्याप्तिविचारः बहिर्व्याप्तिविचारश्च,

वात्स्यश्रीवेङ्कटाचार्यविरचितौ,

श्रीकाञ्ची—प्रतिवादिभयङ्कर-अनन्ताचार्येण

संशोधितौ,

श्रीमद्दर्शनमुद्राक्षरशालायां

मुद्रितावभूताम् ।

श्रीकाञ्ची ।

। १०२४

। [illegible] । [illegible]

पुनर्मुद्रणाधिकारस्संरक्षितास्मिन् ।

मन्यमाणस्वयम् ।